- लौकिकवाङ्मये आर्षकाव्येषु श्रीमद्रामायणम् आदिकाव्यम् अस्ति ।
- अस्य प्रणेता महर्षिः वाल्मीकिः आदिकविः अस्ति ।

# रामायणस्य प्रेरणार्थकः श्लोकः



मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ।।

# श्रीमद्रामायणस्य विशेषाः अंशाः

- 'रामस्य अयनम्' अथवा ‘रामायाः अयनम्' इति रामायणम् ।
- राम-रावणयुद्धम् अस्मिन् वर्णितमिति कारणेन 'वीररसप्रधानकाव्यमिति' इदं प्रसिद्धं जातम् ।
- विप्रलम्भश्रृङ्गारस्य करुणरसस्य च अभिव्यक्तौ चरमोत्कर्षत्वं लक्ष्यते ।

- माधुर्यौजःप्रसादगुणसमन्वितत्वेन, रचनाशैल्याः प्राञ्जलतया, भावानां मनोहारिण्या विवृत्या, सर्वेषां रसानां यथास्थानम् उपन्यासात्, भारतीयसंस्कृतेः विशदं विवरणात् प्रशस्यते संस्तूयते चेदं काव्यं विदग्धैः ।

- आदिमं लौकिककाव्यम् । अतः आदिकाव्यम् ।

- परवर्ति-अनार्षकाव्यानाम् इदम् उपजीव्यकाव्यम् अस्ति ।

- इदं सप्तकाण्डेषु विभक्तम् ।

- 650 सर्गाः सन्ति ।

- अस्मिन् 24,000 श्लोकाः विद्यन्ते इति 'चतुर्विंशतिसाहस्री संहिता' नाम्ना अपि प्रसिद्धम् ।

- श्रीरामचरितम् इतिहासप्रसिद्धमिति, त्रेतायुगे सम्भूतमिति भारतीयानां प्रगाढविश्वासः ।

- आदर्शपिता, आदर्शपुत्रः, आदर्शराजा, आदर्शपतिः, इत्यादिरूपेण श्रीरामः धर्मविग्रहवान् इति, तस्य चरितं आदर्शचरितमिव वर्णयामास कविः ।

- महाकाव्येऽस्मिन् दर्शन-स्मृति-धर्म-राजनीति-समाज-आयुर्वेद-धनुर्वेद-ज्योतिषादीनि शास्त्राणि बहुधा प्रतिपादितानि कविना ।

# काण्डानि

- बालकाण्डम्, 77 सर्गाः
- अयोधायाकाण्डम् - 119 सर्गाः
- अरण्यकाण्डम् - 75 सर्गाः
- किष्किन्धाकाण्डम् - 67 सर्गाः
- सुन्दरकाण्डम् - 68 सर्गाः
- युद्धकाण्डम् - 128 सर्गाः
- उत्तरकाण्डम् - 111 सर्गाः

# उपजीव्यकाव्यानि

| रूपकाणि | |
|---|---|
| प्रतिमानाटकम् | भासः |
| अभिषेकनाटकम् | भासः |
| यज्ञफलनाटकम् | भासः |
| कुन्दमाला | दिङ्नागः |
| आश्चर्यचूडामणिः | शक्तिभद्रः |
| महावीरचरितम् | भवभूतिः |
| उत्तररामचरितम् | भवभूतिः |
| अनर्घराघवम् | मुरारिः |
| बालरामायणम् | राजशेखरः |
| प्रसन्नराघवम् | जयदेवः |
| उन्मत्तराघवम् | विरूपाक्षः |
| आनन्दराघवम् | रामचूडामणिदीक्षितः |
| अद्भुतदर्पणम् | महादेवः |

| महाकाव्यानि | |
|---|---|
| रघुवंशम् | कालिदासः |
| सेतुबन्धः | प्रवरसेनः |
| जानकीहरणम् | कुमारदासः |
| रावणवधः | भट्टिः |
| रामचरितमहाकाव्यम् | अभिनन्दः |
| रामायणमञ्जरी | क्षेमेन्द्रः |
| रघुनाथचरितकाव्यम् | वामनभट्टबाणः |

| चम्पूकाव्यानि | |
|---|---|
| रामायणचम्पूः | भोजराजः |
| उत्तरचम्पूः | वेङ्कटाध्वरिः |
| अमोघराघवचम्पूः | दिवाकरः |
| काकुत्स्थविजयः | वत्सराजः |
| रामचन्द्रचम्पूः | रामचन्द्रकविः |
| रामकथासुधोदयः | श्रीशैलश्रीनिवासः |
| रामाभ्युदयः | श्रीव्यासराजः |

# श्रीमद्रामायणस्य लोकप्रियता

काव्यशास्त्रजगति उत्तमकाव्यं रामायणमिति श्लाघ्यते बुधजनैर्यथा-

काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा ।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ।।

Contd……

रामायणस्य लोकप्रियता न केवलं विदुषां विभूषणम् अपि तु समस्त-सामान्य-सर्वजनानां प्रियम् आपद्यते । दिङ्मात्रेण केचन अत्र समुदाह्रियन्ते-

यावत् स्थास्यन्ति गिरयः सरितश्च महीतले ।
तावद् रामायणकथा लोकेषु प्रचरिष्यति ।।
कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ।।

वाल्मीकिगिरिसम्भूता रामाम्भोनिधि-सङ्गता ।
श्रीमद्रामायणी गङ्गा पुनाति भुवनत्रयम् ।।

सद्दूषणापि निर्दोषा सखरापि सुकोमला ।
नमस्तस्मै कृता येन रम्या रामायणी कथा ।।

